॥ श्रीगुरुभ्यो नमः ॥ ॥ श्रीमहागणाधिपतये नमः ॥

# ॥ अथा शौनकीयोक्त राहुबृहस्पति सन्धिशान्तिविधिः ॥

अथातःसम्प्रवक्ष्यामि राहोर्गुरु द(ह)शान्तये ।
प्राणिनां जीवभूतत्त्वा द्गुरुर्जीव इति स्मृतः ॥
तस्माज्जीववतौ नो च देहो निर्‌जीवउच्यते ।
बलहीने यदाजीवे तस्माच्छान्तिं समाचरेत् ॥
राहुमुक्तो यदा जीवो तत्काले देहपीडनं ।
तस्मिन्कालेतु सम्प्राप्ते पूर्वतः परतस्ततः ॥
षण्मासाभ्यन्तरे मृत्युः प्रवक्ष्यामि समासतः ।
मातापित्रोश्च निधनं भर्तृणामथवा मृतिः ॥
बार्यावियोगदुःखादिपुत्राणां च यदा भवेत् ।
क्षयापस्मारकुष्ठादि महारोगाद्युपद्रवः ॥
देशत्यागो धनत्यागो बन्धूनां कलहप्रदः ।
राजतश्चोरतश्चाग्ने जलसर्पभये तथा ॥
रिपोर्बन्धादितश्चैव पश्चादीनां च पीडनं ।
एवमेतैर्महोत्पाता जायन्ते च दिने दिने ॥
तदारिष्टनिरसार्थं शान्तिं वक्ष्यामि शौनक ।
एतत्फलं मनुष्याणां स्त्रीणां चैव तदर्धकम् ॥
जन्मर्क्षे वात्रिजन्मर्क्षे तथा जन्मदिनेपि वा ।
सूर्यसङ्क्रमणो वापि शुक्लपक्ष शुभेदिने ॥
मन्दवारे गुरोर्वारे शान्तिं कुर्‌याद्यथाविधि ।
पूर्वेद्युरूपवासं च नक्तं वा याचितं च वा ॥
अधश्शय्या ब्रह्मचर्यं कृत्वा नियम पूर्वकं ।
परेद्युः प्रातरुत्थाय दन्तदावन पूर्‌वकम् ॥

स्नात्वापुण्योदके तीर्थे नित्यकर्मविधाय च ।
पुण्याहवाचनं कृत्वा नान्दीश्राद्धं तथैव च ॥
आचार्यवरणं कृत्वा वेदवेदाङ्ग पारगं ।
आचारवन्तं धर्मज्ञं कामक्रोधविवर्जितम् ॥
सपत्नीकं मन्त्रवेत्तं बहुभृत्यकुटुम्बिनं ।
**जन्माश्च ब्राह्मणं चैव वरयित्वानु पूर्वशः ॥**
वस्त्रैराभरणश्चैव मधुपर्कादिनार्चयेत् ।
सर्वौषधि समानीय पञ्चत्वक्पञ्चपल्लवैः ॥
कुष्टं मास्सं हरिद्रद्वे पूर्वशैलेय चन्दनं ।
वचाखचोरमुस्तादि सर्वोषध्यः प्रकीर्तितः ॥
हेमं हेममये पात्रे स्थापयित्वा बृहस्पतिं ।
**पीतांबरधरं छत्रं पीतयज्ञोपवीतिनम् ॥**
**पादकैपीनहेच्छत्रं कमण्डलु विभूषितं ।**
पूजयेत्पीतकुसुमैः कुङ्कुमेन विलेपितम् ॥
धूपादिभिर्दूर्वैः चन्दनैस्तण्डुलैःफलैः ।
मण्डकाद्युपहारैश्च गुरोरग्रे निवेदयेत् ॥
**धर्मशास्त्रार्थतत्त्वज्ञज्ञानविज्ञानपारग ।**
**विबुधातिहराचिन्त्य देवाचार्य नमोस्तुते ॥**
**करालवदनः खड्गचर्मशूलीवरप्रदः ।**
**तिलसिम्हासनस्थश्चराहुरत्रप्रशस्तये ॥**
पूर्वादिदिक्षुलोकेश आवाह्यच यथा क्रमं ।
उत्तरस्यां दिशियजेत्कुम्भेदेवं त्रियम्बकम् ॥
अपैतुमृत्युमन्त्रेण पूजयेद्विधिपूर्वकं ।
उपदेवान्समभ्यर्च्य दुर्गां वास्तु विनायकौ ॥

यमं मृत्युं च कालं च पूजयेत्प्रयतश्शुचिः ।
समिधोश्वत्थवृक्षस्य सहस्रं वा तदर्धकम् ॥
तिलव्रीहियवैर्मिश्रं होतव्यं च पृथक् पृथक् ।
बृहस्पतिमन्त्रेण ऋषिछन्दसमन्वितम् ॥
चरुणापरमान्नेन आज्येन पायसा तथा ।
एतैर्द्रव्यैश्चजुहुयाद्गुरुं प्रतिसमाहितः ॥
सहस्रं वा तदर्धं वा वित्तशाठ्यं न कारयेत् ।
तिलाक्षतैश्च जुहुयादयुतं वा तदर्धकम् ॥
त्रिसहस्रं वा सहस्रं वा तथा मृत्युंजयं प्रति ।
लाजभिः परमान्नैश्च दूर्वाभिश्चरुणाघृतैः ॥
दुर्गाद्याउपदेवश्च होतव्यं शतसङ्ख्यया ।
वेदपारायणं चैव अश्वत्थस्यप्रदक्षिणम् ॥
रुद्राभिषेकं कर्तव्यं शिवसङ्कल्पमेव च ।
नवग्रहजपं चैव यावद्धोमसमापनम् ॥
तावद्धोमासमाने तु पूजयेच्च बृहस्पतिं ।
पीतगन्धैस्तथापुष्पैधूपैर्दीपैश्चभक्तितः ॥
दध्योदनं च नैवेद्यं तथा ताम्बूलसंयुतं ।
मन्त्रेणानेन कैन्तेय समभ्यर्च्य पुनः पुनः ॥
**नमस्ते गिरिजानाथ उमाकान्त नमोस्तुते ।**
**क्रूरग्रहैः पीड्यमानममृताय नमो नमः ॥**
पूजयित्वा सुराचार्यं पश्चादर्घ्यं निवेदयेत् ।
**नमस्ते वाक्पते तुभ्यं दैवज्ञसुमतिप्रभो ॥**
**नमस्ते वाक्पते तुभ्यं गृहाणार्घ्यं बृहस्पते ।**
अर्घ्यं दत्त्वा सुरेशाय जपहोमं समाचरेत् ॥

भक्त्याह्येतैः सुराचार्यः होमपूजादि संस्कृतैः ।
बृहस्पते नमस्तुभ्यं त्वं गृहाण सुरार्चित ॥
जीवोबृहस्पतिस्तुश्रीआचार्यगुरुरङ्गिरा ।
वाचस्पतिर्देवमन्त्री शुभं कुर्यात्सदामम ॥
एवं संप्रार्थयेद्देवं गुरुं भक्त्याप्रपूजयेत् ।
दूर्वाभिस्तिलगोधूमैर्माषैश्च परमान्नकैः ॥
एतैर्द्रव्यैश्च जुहुयात्सहस्रं वा तदर्धकं ।
कयानश्चित्रमन्त्रेण राहुं प्रतिविधानतः ॥
होमावसाने राहुं च पूजयेच्च विधानतः ।
नमस्ते राहवे तुभ्यं नमस्ते सिंहिका सुता ॥
इमां पूजां गृहाणत्वं सन्धिदोषं विनाशय ।
विद्युन्तुद नमस्तेस्तु शशिभास्कर शत्रवे ॥
इदमर्घ्यं प्रदास्यामि ममाऽभीष्टप्रदो भव ।
धूपदीपैःसमभ्यर्च माषान्नं तं निवेदयेत् ॥
ततः पूजावसानेतु प्रतिमां वस्त्रसंयुतां ।
पुरोहिताय शान्ताय प्रदद्याद्राहुतुष्टये ॥
अभिषेकाप्लुतं वस्त्रमाचार्याय निवेदयेत् ।
अश्वदानं सुरगुरोः राहोः छागं तथैव च ॥
प्रदद्याद्विजमुख्येभ्यः तन्मौल्यं वापि दापयेत् ।
अभिषेकं ततः कृत्वा पुत्रदारादि संयुतः ॥
शान्तिसूक्तैः पुरुषसूक्तैः रुद्रसूक्तैस्तथैव च ।
अन्यैः पवित्रसूक्तैश्च राक्षोघ्नैश्चतथैव च ॥
गुरोश्च पीतवस्त्रं तु कृष्णवस्त्रं विधुन्तुदे ।
सालङ्कारं सवस्त्रां च सुशीलां गां पयस्विनीम् ॥

विप्राय वेदविदुषे ब्राह्मणाय प्रदापयेत् ।
महिषीं चाप्यनड्वाहं स्वर्णकांश्चप्रदापयेत् ॥
पञ्चप्रस्थ समायुक्तं माषदानं तु राहवे ।
अवेक्षणाज्यदानं च तिलदानं तथैव च ॥
दशदानानि सर्वाणि ब्राह्मणेभ्यश्च दापयेत् ।
भूरिदानं ब्राह्मणेभ्यो यथाशक्त्याप्रदापयेत् ॥
एवं यः कुरुते सम्यक्शान्तिकर्मसमाहितः ।
सन्धिदोषविनिर्मुक्तो शतायुश्च भविष्यति ॥
सर्वारिष्टविनाशाय पुत्रपौत्राभिवृद्धये ।
सन्ध्युक्तशान्तिं कुर्वीत वित्तशाठ्यविवर्जितः ॥
लोबदानादरो यस्तु शान्तिकर्म न कारयेत् ।
षण्मासे मृत्युमाप्नोति नात्रकर्यविचारणा ॥
यद्वा दरिद्रो भवति तीर्थेषु न तु कारयेत् ॥

**॥ स्वस्ति श्री शौनकीयोक्त राहुबृहस्पति सन्धिशान्ति विधिः ॥**

B.N. Shrinath Udupa
TRIPURASHRI #2/217 (1/238)
Karikallkatte Japthi Post Kundapur TQ Udupi DT 576211
Cell:- +91-9740069904
Email:- shrinath.udupa@gmail.com

Type 2 

॥ श्रीगुरुभ्यो नमः ॥ ॥ श्रीमहागणाधिपतये नमः ॥

# ॥ अथा शौनकीयोक्त राहुबृहस्पतिसन्धिशान्तिविधानम् ॥

अथातः संप्रवक्ष्यामि सन्धिदोषं विनिर्णये ।
शौनकोक्तप्रकारेण श्रूयतां मुनयोधुना ॥
शान्तिं कुर्यात्प्रयत्नेन भानुभौमार्कवासरे ।
अथवा पुण्यकाले तु चन्द्रतारबलान्विते ॥
राहोरन्त्यंशको जीवं मूलेऽनिष्टनिवृत्तये ।
घोरमृत्युविनाशार्थं कुर्याच्छान्तिमनुत्तमम् ॥
गृहस्येशानदिग्भागे कृत्वापुण्याहवाचनं ।
स्वगृह्योक्तविधानेन शुचिर्नियतमानसः ॥
आचार्येणैव वा कुर्यात्तिलराशीन्न्यसेत्क्वचित् ।
पञ्चामृतं पञ्चगव्यं पञ्चत्वक्पल्लवादिकैः ॥
शुद्धोदकं पूरयित्वा पूर्वोक्तेन विधानतः ।
गोरोचनं च कङ्कुष्ठं रत्नगोमेधिकं न्यसेत् ॥
नीलवस्त्रेणसंवेष्ट्य कांस्यपात्रं निधाय च ।
मुद्गबीजं पूरयित्वा पद्ममष्टदलं लिखेत् ॥
**मेधात्मानं तथा राहुं मुरगाकृतिनं शुभं ।**
**धूम्रांगं वक्रगं चैव सिम्हिकातनकं तथा ॥**
चन्द्रादित्यादिरूपं च ग्रासमानं ततो न्यसेत् ।
तन्मध्येपूजयेद्राहुं ध्यानावाहन पूर्वकम् ॥
**एहिदैत्यकुलश्रेष्ठ ग्रहणोत्पातकारक ।**
**ग्रहाणपूजां संप्रीत्या सुस्थिरो भवविष्टरे ॥**
**बिन्नाञ्जनसमाकारं नीलमेघसमप्रभं ।**
**स्थापयामिमहावक्त्र राहुं चन्द्रार्कमर्दनम् ॥**

आसनाद्युपचारान्तं नैवेद्यान्तं समाचरेत् ।
स्वसूत्रोक्तप्रकारेण ततो होमं समाचरेत् ॥
अग्निस्थापनमित्यादि चक्षुष्यन्तं समाचरेत् ।
कुशाग्रैश्चतिलैराज्यैर्लवणोपेतपायसैः ॥
कयानैतिमन्त्रेण पृथगष्टोटोत्तरं शतं ।
कलशस्यान्तिके भागे वृत्तिना मूलकं जपेत् ॥
तथैवसमिदाज्यैश्च चरूणा होमयेत्ततः ।
बृहस्पतिमन्त्रेण पूर्वोक्तेन विधानतः ॥
ऋचातेनैव तत्रैव तज्जपेत्तु सहस्रकं ।
ततः सिष्टकृतं हुत्वा होमशेषं समापयेत् ॥
सन्धिदोषनिवृत्त्यर्थं तत्तद्दानं समाचरेत् ।
**सर्वारिष्टहरं शीसं राहु प्रीतिकरं शुभं ॥** LED
**यस्मादस्यप्रदानेन ह्यतः शान्तिं प्रयच्छमे ॥**
**पूरिते मुद्गबीजैश्च कांस्यपात्रं सुशोभनं ।**
**दास्ये विप्राय महते सर्वारिष्ट निवृत्तये ॥**
**आयुरारोग्यवृद्ध्यर्थं राहोर्मूर्तिकमुत्तमं ।**
**तुभ्यं दास्यामि विप्रेन्द्र यथोक्त फलदो भव ॥**
**सवस्त्रप्रतिमां कुंभं दद्याद्विप्रकुलाय च ।**
**मन्त्रपूतजलेनैव अभिषेकं च कारयेत् ॥**
कयानैतिमन्त्रेण यमायमधुमत्तमं ।
प्रजापतेन त्वदिति ग्रहधिष्ठानमन्त्रकैः ॥
आपड्द्वावुमन्त्रेण शन्नोदेवीति मन्त्रतः ।
येन देवाः पवित्रेण समुद्रज्येष्ठमन्त्रकैः ॥
कारयेदभिषेकं तु पूर्ववस्त्रं विसर्जयेत् ।
शुभ्रवस्त्रधरोभूत्वा शुद्धमाल्यानुलेपितः ॥

सवस्त्रप्रतिमाकुंभमाचार्याय निवेदयेत् ।
आचार्याय च गां दद्याद्यथाशक्तिमुदान्वितः ॥
चित्रं देवीतिसूक्तेन मण्डलस्यावलोकनं ।
ब्राह्मणान्भोजयेद्भक्त्या यथावित्तानुसारतः ॥
एवं यः कुरुते भक्त्यासन्धिकालो प्रयत्नतः ।
आयुरारोग्यमाप्नोति सन्धिदोषो विनष्यति ॥

**॥ स्वस्ति शौनकीयोक्त राहुबृहस्पति सन्धिशान्तिविधिः ॥**



B.N. Shrinath Udupa
TRIPURASHRI #2/217 (1/238)
Karikallkatte Japthi Post Kundapur TQ Udupi DT 576211
Cell:- +91-9740069904
Email:- shrinath.udupa@gmail.com

॥ श्रीगुरुभ्यो नमः ॥ ॥ श्रीमहागणाधिपतये नमः ॥

# ॥ अथा शौनकीयोक्त कुजराहु सन्धिशान्तिविधिः ॥

कुजमुक्तो यदाराहुः प्रवेशसमये यदि ।
तस्मिन्कालेतु संप्राप्ते पूर्वतः परतस्तथा ॥
षण्मासे यद्यरिष्टाणि प्रवक्ष्यामि समासतः ।
मातापित्रोश्चनिधनं भ्रातृणामथवामृतिः ॥
बार्याबियोगदुःखादि पुत्राणां मृतयस्तथा ।
राजतश्चोरतश्चाग्नेः जलसर्पभयस्तथा ॥
क्षयापस्मारकुष्ठादि महारोगाद्युपद्रवः ।
देशत्यागो धनत्यागो बन्दूनां कलहस्तथा ॥
एवमेते महोत्पाता जायन्ते च दिने दिने ।
तदरिष्टनिरसार्थं सन्धिदोषापनुचये ॥
शान्तिं वक्ष्यामि विधिवच्छौनकोऽहं महात्मनां ।
जन्मर्क्षे वात्रिजन्मर्क्षे तथा जन्मदिनोऽपि वा ॥
कुजवारेथ वा मन्दे शान्तिं कुर्याद्विदानतः ।
एकभुक्तं पूर्वदिने स्थण्डिलेशयने स्थितः ॥
परेऽहि प्रातरुत्थाय मङ्गलस्नानमाचरेत् ।
देवतापूजनं कृत्वा पुण्याहं वाचयेत्सुधीः ॥
आचार्यं वरेत्पश्चाद्वेदवेदांगपारगं ।
आचारवन्तं धर्मज्ञं श्रोत्रियं च कुटुंबिनम् ॥
अन्याश्च ऋत्विजो वृत्वा मधुपर्कादिनार्चयेत् ।
भौमस्य ताम्रकलशं अयः पात्रे विधुन्तुदम् ॥
साधिप्रत्यधिदैवत्यौ कलशे च विनिक्षिपेत् ।
सर्वौषधिसमानीय पञ्चत्वक्पञ्चपल्लवान् ॥

पञ्चगव्यं पञ्चरत्नं समानीयाथ भक्तितः ।
भौमस्यप्रतिमाकार्य राहोश्चैवविधानतः ॥
पलमात्रसुवर्णेन तदर्धाधेन वा पुनः ।
यथाशक्त्या च कुर्वीत वित्तं शाठ्यं न कारयेत् ॥
रक्तमाल्यांबरधरः रक्तशूलगदाधरः ।
चतुर्भुजो मेषगमो वरदश्च धरासुतः ॥
कराळवदनः शूरः खड्गचर्मवरप्रदः ।
नीलसिंहासनस्थश्च राहुरत्रप्रशस्तये ॥
अंगुलेनोच्छ्रिताः सर्वे शतमष्टोत्तरं सदा ।
रक्तगंधाक्षतै पुष्पेराढकान्नं निवेद्य च ॥
रक्तगन्धाक्षतैः पुष्पैर्माषान्नं तु निवेदयेत् ।
एवं संपूजयेद्देवं होमं कुर्यादतंद्रितः ॥
तस्यदक्षिणदिग्भागे स्थण्डिलोग्निं निधाय च ।
होमं घृततिलैः कुर्यादग्निमूर्धेति मन्त्रतः ॥
समिद्भिः खदिरैश्चैव पालाशैर्वापिकारयेत् ।
होतव्यं मधुसर्पिभ्यां दध्नाचैव घृते न च ॥
सहस्रसंख्यैः प्रत्येकं शतसंख्यमथापि वा ।
कुजस्य होम कर्तव्यः साधिप्रत्यधिपूर्वकम् ॥
दूर्वाभिस्तिलसर्पिभ्यां माषैः क्षीरैश्च शर्करैः ।
कयानश्चित्रमन्त्रेण होमं कुर्याद्विधानतः ॥
सहस्र संख्यं प्रत्येकं शतमष्टोत्तरं तु वा ।
त्रियंबक समुद्दिष्य परं मृत्योश्च मन्त्रतः ॥
तिलदृव्यैश्चादूर्वाभिरयुतं वा तदर्धकं ।
स्वशक्त्या वा प्रयत्नेन वित्तशाठ्यं न कारयेत् ॥

होमशेषं समाप्याथ पूर्णाहुति मथाचरेत् ।
कलशमार्जनं कृत्वा ब्राह्मणेभ्यः प्रदापयेत् ॥
कुजस्य मेषदानं तु राहोःश्छागं प्रदापयेत् ।
गुडाडकं माषदानं स्वार्यायामर्धमानतः ॥
अवेक्षण गव्यदानं कृष्णगोदान मेव च ।
दशदानं रुद्रजाप्यं वेदपारायणं तथा ॥
राहुमन्त्रं जपं कुर्यात्कुजमन्त्रस्तथैव च ।
कुजस्य प्रभवोऽपि मङ्गलः परिपठ्यते ॥
अमङ्गलं निहत्याशु सर्वदा मङ्गलं कुरु । ( सर्वदायद्यमंगलम् )
नमस्ते राहवे तुभ्यं नमस्ते सिंहिका सुत ॥
सन्धिदोषं निहत्याशु क्षेमं मे कुरु सर्वदा ।
एवं संपूजयेद्देवं होमं कुर्यातदन्द्रितः ॥
शान्तिसूक्तं रुद्रसूक्तं पुरुषसूक्तं तथैव च ।
ब्राह्मणोराशिशोगृह्य दक्षिणाभिश्च तोषयेत् ॥
अभिषेकाप्लुतं वस्त्र माचार्याय निवेदयेत् ।
दीनान्दकृपणांश्चैव तोषयित्वा पृथक् पृथक् ॥
षड्रसैः परमान्नैश्च ब्राह्मणानां च भोजनम् ।
एवं कृते विधानेन सन्धिदोषोविनश्यति ॥
दीर्घमायुरवाप्नोति पुत्रपौत्र समन्वितः ।
कुजराहोश्च पीडातु न कदाचिद्भविष्यति ॥

**॥ स्वस्तिश्री शौनकीये कुजराहु सन्धिशान्ति विधानम् ॥**

B.N. Shrinath Udupa
TRIPURASHRI #2/217 (1/238)
Karikallkatte Japthi Post Kundapur TQ Udupi DT 576211
Cell:- +91-9740069904
Email:- shrinath.udupa@gmail.com

# ॥ अथाशौनकीयोक्त शुक्रादित्यसन्धिशान्तिः ॥

अथातःसंप्रवक्ष्यामि शुक्रादित्यस्यसन्धिकं ।
शत्रुक्षेत्रगतौस्यातं दुःखादौ देहपीडकौ ॥
बलहीनौ ग्रहौस्यातं दुष्टग्रहनिरीक्षितौ ।
भार्यावियोगक्लेशादि धन धान्याद्यरिष्टदौ ॥
तस्माच्छान्तिं प्रवक्ष्यामि ग्रहानुग्रहहेतुकं ।
शान्तिता प्रीतमनसः ग्रहाः कुर्वन्ति मङ्गलम् ॥
जन्मार्क्षे वात्रिजन्मार्क्षे तथा जन्मदिनेऽपिवा ।
बानुवारेऽथ वाशुक्रे शान्तिकुर्याद्विचक्षणः ॥
पूर्वेद्युरुपवासं च कत्रुरत्र प्रशस्तये ।
परेद्युः प्रातरुत्थाय स्नात्वातीर्थोदके शुभे ॥
नित्यकर्मसमाप्याथ गुरुवन्दनपूर्वकं ।
पुण्याहं वाचयित्वाथ नान्दीश्राद्धं समाचरेत् ॥
आचार्यं वरयेत्पश्चाद्वेदवेदाङ्गपारगं ।
आचारवन्तं धर्मज्ञं सुशीलं च कुटुंबिनम् ॥
अन्यांश्चश्रोत्रियांस्तत्र जपाद्यर्थे नियोजयेत् ।
आहूतान्ब्राह्मणांश्चैव मधुपर्कादिनार्चयेत् ॥
गृहस्येशानदिग्भागे पावकं स्थापयेदथ ।
स्वगृह्योक्तविधानेन जपहोमादिकं चरेत् ॥
विधिनोक्तप्रकारेण कलशाराधनं स्मृतं ।
सुवर्णरजतां चैव प्रतिमां वस्त्रसंयुतम् ॥
कलशोपरिसंस्थाप्य ग्रहमाराधयेत्ततः ।
न भारं तु सुवर्णेन रजतेन तु भार्गवम् ॥
ताम्रं वाथान्यलोहेन कलशद्वयमत्रतु ।
हेमं तत्रप्रकुर्वीत स्वशाखोक्तविधानतः ॥

पञ्चामृतं पञ्चगव्यं पञ्चत्वक्पंचपल्लवादिकैः ।
शुद्धोदकं पूरयित्वा ओषधीस्तत्रनिक्षिपेत् ॥
कुष्टमांसं हरिद्राद्वे पूर्वशैलेय चन्दनं ।
वचाखचोरमस्तादि सर्वोषद्यः प्रकीर्तिताः ॥
गोरोचनं च कङ्कुष्टं रत्नगोमेधिकं न्यसेत् ।
रक्तवस्त्रेण संवेष्ट्य कलशं विधिनार्चयेत् ॥
आकृष्णेनेतिमन्त्रेण रविमावाहयेत्सुधीः ।
शुक्रंते अन्यदित्येवं भार्गवावाहनं स्मृतम् ॥
कुंभेष्वावाहयेद्देवं साधिप्रत्यधिदैवतं ।
आसनाद्युपचारश्च नैवेद्यान्तं प्रकल्प्य च ॥
षोडशैरुपचारैश्च पूजां तत्र समाचरेत् ।
प्रधानदेवतामन्त्रं कुम्भेस्पृष्ट्वाजपेत्ततः ॥
अन्वाधानादिकं कृत्वा चक्षुष्यन्तं समाचरेत् ।
घृतमिश्रतिलद्रव्यं समिदार्कै(इ)हस्मृतः ॥
गोधूममधुसर्पिश्च पुनर्दधिघृतं भवेत् ।
आकृष्णेनेति मन्त्रेण अष्टोत्तरसहस्रकम् ॥
शतमष्टोत्तरं वापि अष्टामिंशतिरेव वा ।
आदित्यं जुहुयादग्नौ प्रधानं देवतामिह ॥
अग्निंदूतेतिमन्त्रेण अग्निंसूर्याधिदेवतं ।
कद्रुद्रायेतिमन्त्रेण रुद्रं प्रत्यधिदेवतम् ॥
दशांशसंख्ययाहोमं कुर्यादत्र प्रधानतः ।
प्रधानदेवतां शुक्रं उक्तद्रव्येणहोमयेत् ॥
घृतमिश्रतिलंचाथ समिदोदुंबरं भवेत् ।
श्वेतप्रियङ्गुतण्डुल मधुसर्पिदधिघृतम् ॥
शुक्रंतेअन्यदित्येवं मन्त्रो शुक्रे प्रकीर्तितः ।
अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा ॥

अष्टविंशतिरेवापिमानते जुहुयाद्धविः ।
इन्द्राणीमासुनारीति इन्द्राणीमधिदेवतम् ॥
इन्द्रश्रेष्ठानीतिचेन्द्रं यजेत्प्रत्यधिदेवतं ।
दशांशहोमसंख्यापि प्रधानादत्रकीर्तिता ॥
शुक्रादित्यौ समुद्दिष्य चोक्तद्रव्यैः प्रधानकं ।
साधिप्रत्यधिदेवैश्च हुत्वातत्तत्प्रमाणतः ॥
त्रियम्बकेनमन्त्रेण यजेत्मृत्युंजयं ततः ।
तिलद्रव्यैश्चदूर्वाभिः संख्ययात्रिसहस्रकम् ॥
लोभादनादराद्वापि वित्तशाठ्यं न कारयेत् ।
ततः सिष्ठकृतंहुत्वा होमशेषं समापयेत् ॥
रक्तवस्त्रं तथाह्यश्वगोदानं वस्त्रदानकं ।
श्वेतप्रियङ्गुगोधूमं कुर्या....भदानकम् ॥ ?!
कुर्यादन्यानिदानानि ग्रहदोषोपशान्तये ।
प्रदक्षिणनमस्कारस्स्तोत्रमन्त्रैः संप्रार्थनादिभिः ॥
ग्रहदोषनिवृत्यर्थं भक्त्यासंप्रार्थ्यते ततः ।
**दैत्याचार्यनमस्तेस्तु दैत्यानांच हिते रत ॥**
**सन्धिदोषं निहत्याषु क्षेमं मे कुरु सर्वदा ।**
**रोगघ्नोऽसि द्विषघ्नोऽसि प्राणिनां तुष्टिदोऽसि हि ।**
**मम देहोत्थरोगं तु निहत्य शुभदो भव ॥**
विप्रश्च यजमानाय कलशस्याभिसेचनं ।
कुर्योर्ग्रहोक्तमन्त्रैश्च अन्यैः पौराणिकैः शुभैः ॥
अभिषेकाप्लुतं वस्त्रमाचार्याय निवेदयेत् ।
पूर्ववस्त्रं विसृज्याथ शुभ्रवस्त्रधरोभवेत् ॥
समस्त्रप्रतिमां कुंभमाचार्याय निवेदयेत् ।
आचार्याय च गांदद्यात्सवत्सां च पयस्विनीम् ॥

ऋत्विग्भोदक्षिणां दद्याद्यथाशक्तिमुदान्वितः ।
अन्यांश्चतोषयेद्भक्त्याभूरिदानादिभिर्द्विजान् ॥
ब्राह्मणान्भोजयेत्पश्चात् षड्रसैः परमान्नकैः ।
आशिषो वाचयित्वाथ ब्राह्मणैर्वेदपारगैः ॥
पत्नीपुत्रसमेतश्च भुंजीयाद्बन्धुभिःसह ।
एवं यः कुरुते भक्त्यासन्धिकाले विशेषतः ॥
आयुरारोग्यमैश्वर्यं लभते वांछितं फलं ।
शुक्रादित्यस्य पीडाच कदाचिन्न भविष्यति ॥
सन्धिदोषोपशान्त्यर्थमित्येवं शौनकोऽब्रवीत् ॥
॥ **स्वस्तिशौनकोक्तशुक्रादित्यसन्धिशान्तिम्** ॥



B.N. Shrinath Udupa
TRIPURASHRI #2/217 (1/238)
Karikallkatte Japthi Post Kundapur TQ Udupi DT 576211
Cell:- +91-9740069904
Email:- shrinath.udupa@gmail.com